# श्रीदत्तात्रेय अष्टचक्रबीजस्तोत्रम्

दिगंबरं भस्मसुगन्धलेपनं
चक्रं त्रिशूलं डमरुं गदां च ।
पद्मासनस्थं ऋषिदेववन्दितं
दत्तात्रेयध्यानमभीष्टसिद्धिदम् ॥ १॥

मूलाधारे वारिजपद्मे सचतुष्के
वंशंषंसं वर्णविशालैः सुविशालैः ।
रक्तं वर्णं श्रीभगवतं गणनाथं
दत्तात्रेयं श्रीगुरूमूर्तिं प्रणतोऽस्मि ॥ २॥

स्वाधिष्ठाने षट्दलपद्मे तनुलिंगे
बालान्तैस्तद्वर्णविशालैः सुविशालैः ।
पीतं वर्णं वाक्पतिरूपं द्रुहिणं तं
दत्तात्रेयं श्रीगुरूमूर्तिं प्रणतोऽस्मि ॥ ३॥

नाभौ पद्मे पत्रदशांके डफवर्णे
लक्ष्मीकान्तं गरूढारूढं मणिपूरे ।
नीलवर्णं निर्गुणरूपं निगमाक्षं
दत्तात्रेयं श्रीगुरूमूर्तिं प्रणतोऽस्मि ॥ ४॥

हृत्पद्मांते द्वादशपत्रे कठवर्णे
अनाहतांते वृषभारूढं शिवरूपम् ।
सर्गस्थित्यंतां कुर्वाणं धवलांगं
दत्तात्रेयं श्रीगुरूमूर्तिं प्रणतोऽस्मि ५ ॥

कंठस्थाने चक्रविशुद्धे कमलान्ते
चंद्राकारे षोडशपत्रे स्वरवर्णे
मायाधीशं जीवशिवं तं भगवंतं
दत्तात्रेयं श्रीगुरूमूर्तिं प्रणतोऽस्मि ॥ ६॥

आज्ञाचक्रे भृकुटिस्थाने द्विदलान्ते
हं क्षं बीजं ज्ञानसमुद्रं गुरूमूर्तिं
विद्युत्वर्णं ज्ञानमयं तं निटिलाक्षं
दत्तात्रेयं श्रीगुरूमूर्तिं प्रणतोऽस्मि ॥ ७॥

मूर्ध्निस्थाने वारिजपद्मे शशिबीजं

शुभ्रं वर्णं पत्रसहस्रे ललनाख्ये
हं बीजाख्यं वर्णसहस्रं तूर्यातं
दत्तात्रेयं श्रीगुरूमूर्तिं प्रणतोऽस्मि ॥ ८॥

ब्रह्मानन्दं ब्रह्ममुकुन्दं भगवन्तं
ब्रह्मज्ञानं ज्ञानमयं तं स्वयमेव
परमात्मानं ब्रह्ममुनीद्रं भसिताङ्गं
दत्तात्रेयं श्रीगुरूमूर्तिं प्रणतोऽस्मि ॥ ९॥

इति श्रीमद्शङ्कराचार्यविरचितं श्रीदत्तात्रेय अष्टचक्रबीजस्तोत्रं सम्पूर्णम् ।